१०श्री॰ श्रीगणेशाय नमः श्रीवेदव्यास उवाच शृणु गांगेय वक्ष्या
१ मि गणस्याद्भुतकर्मणः नाम्नामष्टशतं पुण्यं महापातक
नाशनं १ नातः परतरं गुह्यं त्रिषु लोकेषु विद्यते कैला
सशिखरे रम्ये नानारत्नविचित्रिते २ एकाग्रः प्रयतो
भूत्वा विष्णुमाराध्य शंकरः उपविष्टस्ततो भोक्तुं पार्व
तीं शंकरोब्रवीत् ३ पार्वत्येहि मया सार्द्धं भोक्तुं भुवन
वंदिते तमाह पार्वती देवी जप्त्वा नामसहस्रकं न १

तोभोस्याम्यहंदेवभुज्यतांभवताप्रभो ४ ततस्तांपार्वतीं
प्राहप्रसन्नपरमेश्वरः धन्यासिकृतपुण्यासिविष्णुभक्तासि
पार्वति ५ दुर्लभावैसवीभक्तिर्भाग्यधेयंविनेश्वरि
रकारादीनिनामानिश्रृण्वतोममपार्वति मनःप्रसन्नतामे
तिरामनामाभिशंकया ६ रमंतेयोगिनोनंतेनित्यानंदेचि
दात्मनि इतिरामपदेनासौपरंब्रह्माभिधीयते ७ राम
रामेतिरामेतिरमेरामेमनोरमे सहस्रनामततुल्यंराम

रा०अ नामवराननेः ८ रामेत्युक्त्वा महादेवि भुंक्ष्व सार्द्धं मयाधुना
ततो रामेति नामोक्त्वा सह भुक्त्वापि पार्वती ९ ततो भुक्त्वा
महादेवी शंभुना सह संस्थिता पप्रच्छ श्रीमहादेवं प्री
तप्रणवमानसा १० श्रीपार्वत्युवाच सहस्रनाम
ना तत्तुल्यं राममंत्रत्वयोदितं तस्यान्यान्यपि नामानि संति
वै रावणद्विषः कथ्यतां मे महादेव तत्र मे प्रीतिरुत्तमा
११ श्रीमहादेव उवाच शृणु नामानि वक्ष्यामि रामस्य

द्रस्य पार्वति १२ वैदिका लौकिकाः शब्दा ये केचित्संति पा
र्वति १३ नामानि रामचंद्रस्य सहस्रं तेषु चाधिकं तेषु ता
त्पर्यतमुख्यं हि नाम्नामष्टोत्तरशतं १४ विस्तरैकैकनामा
नि सर्ववेदाधिकं मतं तादृक् नामसहस्रेण रामनाम स
मं मतं १५ जपतः सर्ववेदांश्च सर्वमंत्रांश्च पार्वति तस्मा
त्कोटिगुणं पुण्यं रामनाम्नैव लभ्यते १६ ॐ अस्य श्री
रामाष्टोत्तरशतनाममालामंत्रस्तोत्रस्य वेदव्यास ऋषिः श्री

रामःपरमात्मात्मादेवताअनुष्टुप्छंदः श्रीरामप्रीत
र्थेजपेविनियोगः श्रीरामोरामभद्रश्चरामचंद्रश्चशा
श्वतः राजीवलोचनः श्रीमान्राजेंद्रोरघुपुंगवः १
जानकीवल्लभोजैत्रोजितामित्रोजनार्दनः विश्वामित्र
प्रियोदांतः शरणत्राणतत्परः २ वालिप्रमथनोवा
ग्मीसत्यवाक्सत्यविक्रमः सत्यव्रतोव्रतफलःसदाहनु
मदाश्रयः ३ कौशलेयःखरध्वंसीविराधवधपंडि

तः विभीषणपरित्राता दशग्रीवशिरोहरः २० सप्तता
लप्रभेत्ता च हरकोदंडखंडनः जामदग्न्यमहादर्पदल
नस्ताडकांतकृत् २१ वेदांतसारो वेदात्मा भववैद्यश्च
भेषजं दूषणत्रिशिरोहंता त्रिमूर्त्तिस्त्रिगुणात्मवान्
२२ त्रिविक्रमस्त्रिलोकात्मा पुण्यचारित्रकीर्त्तनः त्रिलो
लोकीरक्षको धन्वी दंडकारण्यपावनः २३ अहल्यापाव
नश्चैव विप्रभक्तो वरप्रदः जितेंद्रियो जितक्रोधो जिता

रा स मित्रोजगद्गुरुः २४ कृत्स्नवानरसंघातीचित्रकूटसमाश्रि
स्र° तः जयंतत्राणवरदःसुमित्रापुत्रसेवितः २५ सर्वदेवा
४ धिदेवश्चमृतवानरजीवनः मायामारीचहंताचमहा
भागोमहाभुजः २६ सर्वदेवस्तुतःसौम्योब्रह्मण्योमुनि
संस्तुतः महायोगीमहोदारः सुग्रीवेप्सितराज्यदः
२७ सर्वपुण्याधिकफलस्मृतसर्वाघनाशनः आदिदेवो
महादेवःपरमःपुरुषस्तथा २८ पुण्योदयोदयासारः ४

पुराणः पुरुषोत्तमः स्मितवक्त्रो मितभाषी [redacted] चराघवः
२९ अनंतगुणगंभीरो धीरोदात्तगुणोत्तरः मायामानुष
चारित्रो महादेवादिपूजितः ३० सेतुकृत जितवारीशः स
र्वतीर्थमयो हरिः श्यामांगः सुंदरः शूरः पीतवासा ध
नुर्द्धरः ३१ सर्वयज्ञाधिपो यज्ञो जरामरणवर्जितः शि
वलिंगप्रतिष्ठाता सर्वावगुणवर्जितः ३२ परमात्मा
परंब्रह्म सच्चिदानंदविग्रहः परंज्योतिः परंधाम परा

कोशः परात्परः ३३ परेशः पारगः पारः सर्वदेवात्मकः शिवः
इतीदं रामचंद्रस्य नाम्नामष्टोत्तरं शतं ३४ गुह्याद्गुह्यत
रं देवि तव प्रीत्या प्रकीर्त्तितं यः पठेच्छृणुयाद्वापि भक्ति
युक्तेन चेतसा ३५ मुच्यते सर्वपापेभ्यः कल्पकोटिशतै
१ण जलानि स्थलतां यांति शत्रवो यांति मित्रतां ३६
३६ राजानो वश्यतां यांति वन्ह्यो यांति शीततां प्रानुकू
ल्यं च भूतानि स्थैर्यं यांति चलाश्रयः ३७ अनुग्रहं ये

५

ताग्रांतिशांतिमायांतुपद्रवाः पठतोभक्तिभावेननरस्य
गिरिसंभवे यः पठेत्सर्वयाभक्त्यातस्यवश्यंजगत्त्रयं ३८
यंयंकामयतेकामंतंतंप्राप्नोतिकीर्त्तनात् यःपठेद्राम
चंद्रस्यनाम्नामष्टोत्तरंशतं ३९ कालेवापिकुदीताः
सर्वपापैःप्रमुच्यते सर्वदेवेषुतीर्थेषुदानेषुचतपस्सुच
४० तत्फलंकोटिगुणितंस्तवेनानेनलभ्यतेध्रुवं एषुलोके
षुसर्वेषुजंपश्चानंतमाप्नुयात् ४१ कल्पकोटिसहस्रा

ति कल्पकोटिशतानि वैकुंठे वासमाप्नोति ४१ [illegible]
४२ रामं दूर्वादलश्यामं पद्माक्षं पीतवाससं स्तुवंति नामभिर्दि
व्यैर्नतेसंसारिणो नरः ४३ रामाय रामभद्राय रामचंद्राय वेध
से रघुनाथाय नाथाय सीतायाः पतये नमः ४४ इमं मंत्रं म
हादेवि जपन्नेव दिवानिशं सर्वपापविनिर्मुक्तात्मा विष्णुसायुज्य
माप्नुयात् ४५ इतीदं रामचंद्रस्य माहात्म्यं वेदसंमितं कथि
तं तव गांगेय यतस्त्वं वैष्णवोत्तमः ४६ इति श्रीपद्मपुरा
णे उमामहेश्वरसंवादे श्रीरामाष्टोत्तरशतनामाभिधानं संपू